भाष्यप्रकाशः ।

वृत्तिष्वप्येतादृशव्याख्यानानुमानात् । तेनात्रेदं निष्पन्नम् । सांख्ये हि प्रकृतिपुरुषपर्यन्तता निरीश्वरता च श्रुतिविरुद्धा । सेश्वरसांख्ये च तदैश्वर्यस्य प्रधानाधीनता केवलनिमित्तता । तथैव योगेपि । तदननुसंधाय तत्र प्रवृत्तानां जीवन्मुक्तताभवनोत्तरमपि पातः । तयोर्भगवन्निष्ठताया अज्ञानात् । तदत्रैवोक्तं, न चैनमित्यर्द्धेन । दशमस्कन्धे च ।

'येन्येरविन्दाक्ष विमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः ।
आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः' इति ।

तयोर्भगवत्परत्वज्ञाने तु देवहूतिवत्कृतार्थता । तदप्युक्तं द्वितीयस्कन्धे ।

'जज्ञे च कर्दमगृहे द्विजदेवहूत्यां स्त्रीभिः समं नवभिरात्मगतिं स्वमात्रे ।
ऊचे ययात्मशमलं गुणसङ्गपङ्कमस्मिन् विधूय कपिलस्य गतिं प्रपेदे' इति ।

एवं पाशुपतेपि साधनादिकं पशुपतेः परत्वं च श्रुतिविरुद्धम् । तन्मयात्र प्रागेव 'अन्तस्तद्धर्मोदि' अधिकरणेषु व्युत्पादितं, प्रहस्ते च प्रपञ्चितम् । अतस्तावन्मात्रपरतायां पूर्ववत् पातः । भगवदङ्घ्र्यनादरणात् ।

'त्वामेवान्ये शिवोक्तेन मार्गेण शिवरूपिणम् । बह्वाचार्यविभेदेन भगवन् समुपासते'

इत्यक्रूरोक्तरीत्या भगवत्परत्वज्ञाने तु क्रमान्मुक्तिः । तदप्युक्तं ब्रह्मपुराणे समाप्तिदशायां विष्णुमायानुकीर्त्तनाध्याये व्यासेन

'अन्यदेवेषु या भक्तिः पुरुषस्येह जायते । कर्मणा मनसा वाचा तद्गतेनान्तरात्मना ।
तेन तस्य भवेद्भक्तिर्यजने मुनिसत्तमाः । स करोति ततो विप्रा भक्तिं चाग्नेः समाहितः ।
तुष्टे हुताशने तद्वद्भक्तिर्भवति भास्करे । पूजां करोति सततमादित्यस्य ततो द्विजाः ।
प्रसन्ने भास्करे तस्य भक्तिर्भवति तत्त्वतः । सेवां करोति विधिवत् स तु शंभोः प्रयत्नतः ।

रश्मिः ।

स्वमते व्यवस्थामाहुः **सांख्ये हीति** । **तदनन्विति** परमकाष्ठापन्नत्वमीश्वरेऽननुसंधाय तत्र साधने विरुद्धांशमननुसंधाय तत्र शास्त्रयोरिति वार्थः । **तयोरिति** शास्त्रयोः । **न चैनमिति** । **परं पदमिति** जीवन्मुक्तत्वम् । **तयोरिति** सेश्वरसांख्ययोगयोः । **परत्वमिति** परमकाष्ठापन्नत्वम् । **प्रपञ्चितमिति** प्रहस्ते वादत्रयं भवति । मध्यमे तु सर्वमेतत् प्रपञ्चितम् । नृसिंहोत्तरतापनीये नवमखण्डे 'अनुपनीतशतमेकेनोपनीतेन तत्समम्'इत्यारभ्य गृहस्थवानप्रस्थयतिरुद्रजाप्यथर्वशिरःशिखाध्यापकान्तानां तथैव दिशा यथोत्तरमुत्कर्षमुक्त्वोच्यते । 'अथर्वशिरःशिखाध्यापकशतमेकेन मन्त्रराजजापकेन तत्समम्'इति मन्त्रराजजापके उत्कर्षो विश्राम्यन्विष्णोत्कर्षमाह । तथा ब्रह्मकृतशिवस्तुतौ 'जाने त्वामीशं विश्वस्य जगतो योनिबीजयोः ॥ शक्तेः शिवस्य च परं यत्तद्ब्रह्म निरन्तरम्' इति परत्वोक्त्यनन्तरं 'भवांस्तु पुंसः परमस्य मायया दुरत्ययास्पृष्टमतिः समस्तदृक्' इति परशिवस्य तन्मायास्पृष्टमतित्वमाह न तु परत्वमिति संक्षेपः । **तावन्मात्रेति** पशुपतिमात्रपरतायाम् । **पूर्ववत्** सांख्ययोगाभ्यां पातस्तत्तुल्य इत्यर्थः । **भक्तिमिति** सेवाम् । यजनं सेवेत्युक्तम् । **यजनेन** चित्तशुद्धौ भक्तिं वा । वेदमर्यादोक्ता । अग्रे आदित्योधिकारी तस्य भक्तिः । तदग्रे 'मद्भक्तपूजाभ्यधिका'इति

भाष्यप्रकाशः।

तुष्टे त्रिलोचने तस्य भक्तिर्भवति केशवे। संपूज्य तं जगन्नाथं वासुदेवाख्यमव्ययम्।
ततो भुक्तिं च मुक्तिं च स प्राप्नोति द्विजोत्तमाः' इति।

एवं पञ्चरात्रेपि यो विरुद्धांशस्तदननुसंधाने विमोहकत्वान्न मुक्तिः। तदनुसंधाय तदंशत्यागे तु तदुक्तसाधनपाकेन साक्षादेव मुक्तिः 'पञ्चरात्रविदः' इति मोक्षधर्मीयवाक्यात्। अतो न कस्यापि वाक्यस्यास्मिन् प्रकारे विरोध इति सर्वं सुस्थम्।

रामानुजाचार्यास्तु आद्यं सूत्रद्वयं पूर्वपक्षसूत्रत्वेनाभिधाय, विज्ञानादीति सूत्रद्वयं सिद्धान्तीयत्वेनाभिधायैवं व्याचक्रुः। वाशब्दः पक्षविपरिवर्तनार्थः। विज्ञानं च आदि चेति विज्ञानादि परं ब्रह्म। संकर्षणप्रद्युम्नानिरुद्धानां परब्रह्मभावे परब्रह्मरूपत्वाङ्गीकारे तदप्रतिषेधः। पञ्चरात्रप्रामाण्याप्रतिषेधः। विप्रतिषेधात्। अस्मिन्नपि तन्त्रे जीवोत्पत्तेर्विशेषेण प्रतिषेधाच्च नास्याप्रामाण्यमिति। एवं व्याख्याने प्रमाणत्वेन पञ्चरात्रस्थवाक्यान्यप्युदाजह्रुः। शाण्डिल्यावस्थासंबन्धिनीं निन्दां च, 'न हि निन्दा'न्यायेनानुदितहोमनिन्दावत् पञ्चरात्रप्रशंसातात्पर्यकामूचुः।

रश्मिः।

वाक्यान्चिछवभक्तिः। केशव इति कश्चेशश्च केशौ तयोर्व सुखं यस्मादित्यलौकिकी व्युत्पत्तिः। लौकिकी तु व्याकरणे केशाः सन्त्यस्येति। पञ्चरात्रेति। 'पञ्चरात्रविदो ये तु यथाक्रमपरानृप। एकान्तभावोपगतास्ते हरिं प्रविशन्ति वा' इति। पूर्वपक्षेति स्वसिद्धान्तः। द्वितीयसूत्रार्थोऽपि पूर्वपक्षार्थः। तादृशसूत्रत्वेनेत्यर्थः। द्वितीयसूत्रोपन्यासपूर्वकं व्याख्यानमाहुः विप्रतीति। अस्मिन्निति पञ्चरात्रे। प्रतिषेधादिति। यथोक्तं परमसंहितायाम्। 'अचेतना परार्था च नित्या सततविक्रिया। त्रिगुणा कर्मिणां क्षेत्रं प्रकृते रूपमुच्यते। व्याप्तिरूपेण संबन्धस्तस्याश्च पुरुषस्य च। स ह्यनादिरनन्तश्च परमार्थेन निश्चितः' इति वाक्यैः पञ्चरात्रस्थैः। एवमिति सर्वांशे प्रामाण्यव्याख्याने। पञ्चरात्रस्थेति तान्युक्तानि। अपिशब्देन भारतशास्त्रम्। तद्वाक्यानि तु मोक्षधर्मे ज्ञानकाण्डे 'गृहस्थो ब्रह्मचारी च वानप्रस्थोथ भिक्षुकः। य इच्छेत्सिद्धिमास्थातुं देवतां कां यजेत सः' इत्यारभ्य महता प्रबन्धेन पञ्चरात्रप्रक्रियां प्रतिपाद्य 'इदं दशसहस्राद्धि भारताख्यानविस्तरात्। आविध्य मतिमन्थानं दध्नो घृतमिवोद्धृतम्। नवनीतं यथा दध्नां द्विपदां ब्राह्मणो यथा। आरण्यकं च वेदेभ्य औषधीभ्यो यथाऽमृतम्। इदं महोपनिषदं चतुर्वेदसमन्वितम्। सांख्ययोगकृतान्तेन पञ्चरात्रानुशब्दितम्। इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम्। ऋग्यजुःसामभिर्जुष्टमथर्वाङ्गिरसैस्तथा। भविष्यति प्रमाणं वै एतदेवानुशासनम्' इति। शाण्डिल्येति साङ्गेषु वेदेषु निष्ठामलभमानः शाण्डिल्यः पञ्चरात्रमधीतवानिति वेदनिन्दा ताम्। नहीति नहि निन्दा निन्दितुं प्रवर्ततेपि तु विधेयं स्तोतुमिति न्यायेन। अनुदितेति 'प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम्'इति श्रुतिः। ऊचुरिति। स्वमार्गे तु. 'मत्त्या प्रसन्ने तु हरौ तं योगेनैव योजयेत्' इति तृतीयस्कन्धनिबन्धाद्भक्त्या प्रसन्ने हरौ सति पश्चादस्यार्थस्य योगः 'आसीज्ज्ञानमथो ह्यर्थः' इति सांख्ये श्रीभागवतात्। सांख्ययोगयोरैक्यात्। ज्ञानं सत्यानन्तयोरुपलक्षकम्। अङ्गीचक्रुरिति। सूत्रव्याख्यातुः शक्तिपक्षं दूषयति उत्पत्तीति। नहि पुरुषाननुगृहीतस्त्रीभ्य उत्पत्तिर्दृश्यते। न

भाष्यप्रकाशः ।

मध्वाचार्यास्त्वेतत्सूत्रचतुष्टयं शाक्तमतनिराकरणार्थत्वेनाङ्गीचक्रुः । तथा चात्र वेदविरुद्धानां स्मृतीनामप्रामाण्यान्न ताभिः स्वतः किंचित् फलमिति सिद्धम् ॥ ४५ ॥

इत्यष्टमुत्पत्त्यसंभवादित्यधिकरणम् ॥ ८ ॥

इति श्रीमद्वल्लभाचार्यचरणनखचन्द्रनिरस्तहृदयध्वान्तस्य पुरुषोत्तमस्य कृतौ भाष्यप्रकाशे द्वितीयाध्यायस्य द्वितीयः पादः ॥ २ ॥ २ ॥

रश्मिः ।

च. कर्तुः करणम् । यदि पुरुषोऽङ्गीक्रियते तस्यापि करणाभावात्तदनुपपत्तिः । **विज्ञानादिभाव इति** । यदि विज्ञानादिकरणं तस्याङ्गीक्रियते तदा तत एव सृष्ट्याद्युत्पत्तेरीश्वरवादान्तर्भावः । विप्रतिषेधाच्च [illegible] भाष्यम् । अत्रेति संपूर्णपादे । **अप्रामाण्यादिति** [illegible] ति शास्त्राणां तु विशेषप्रकारे प्रामाण्यमस्ति । यथा वेदवेदान्तयोः परस्पराङ्गाङ्गीभावे प्रामाण्यं तथा भक्तपूजने पाशुपतं शास्त्रं प्रमाणम् । वेदवेदान्तोक्तसाधनप्रसन्नभगवति सांख्ययोगौ सेश्वरौ प्रमाणं योजितौ । पञ्चरात्रं तु वेदाज्ञान इत्युक्तम् । अतस्ताभिर्न स्वतः किंचित्फलमित्यर्थः । इति श्रीति । पाद इति तर्कपाद इत्यर्थः ॥ ४५ ॥

इत्यष्टमुत्पत्त्यसंभवादित्यधिकरणम् ॥ ८ ॥

इति श्रीविठ्ठलेश्वरैश्वर्यनिरस्तसमस्तान्तरायेण श्रीगोविन्दरायपौत्रेण संपूर्णचेन्ना विठ्ठलरायभ्रात्रीयेण गोकुलोत्सवात्मजगोपेश्वरेण कृते भाष्यप्रकाशरश्मौ द्वितीयाध्यायस्य द्वितीयः तर्कपादः संपूर्णतामगमत् ॥ २ ॥ २ ॥

